श्रीगणेशायनमः ॥ त्रयोदश्यांकृतैकभक्तश्चतुर्दश्यांकृतनित्यक्रियःप्रातर्मंत्रेणसंकल्पंकुर्यात् ॥
देशकालौस्मृत्वा ॥ शिवरात्रिव्रतंह्येतत्करिष्येहंमहाफलं ॥ निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जग
त्पते ॥ चतुर्दश्यांनिराहारोभूत्वाशंभोपरेहनि ॥ भोक्ष्येहंभुक्तिमुक्त्यर्थंशरणंमेभवेश्वर ॥ इति ॥
द्विजस्तुरात्रींप्रपद्येजननीमित्यृचावपिपठित्वाजलमुत्सृजेत्॥ ततःसायाह्नेकृष्णतिलैःस्वगायत्र्या
जलाशयेगृहेवास्नात्वा धृतभस्मत्रिपुंड्रुद्राक्षोनिशामुखेशिवायतनंगत्वाक्षालितपादःस्वाचांतउ
दङ्मुखोदेशकालौसंकीर्त्य शिवरात्रौशिवप्रीत्यर्थंप्रथमयामपूजांकरिष्येइतियामचतुष्टयेभिन्नपू
जाचतुष्टयचिकीर्षायांसंकल्पः॥ सकृत्पूजाचिकीर्षायांश्रीशिवप्रीत्यर्थंशिवरात्रौश्रीशिवपूजांकरि
ष्यइतिसंकल्पः॥ तत्रादौसामान्यतःपूजाविधिरुच्यते॥ यामभेदेनविशेषस्तुअग्रेवक्ष्यते॥ तत्रसं
कल्पांतेगणेशंसंपूज्यपृथ्वीत्याद्यासनविधिंपौरुषसूक्तन्यासादिविधाय ॥ अस्यश्रीशिवपंचाक्षरमं
त्रस्यवामदेवऋषिः अनुष्टुप्छंदः श्रीसदाशिवोदेवता श्रीसदाशिवप्रीत्यर्थेन्यासेपूजनेजपेचविनि
योगः॥ वामदेवऋषयेनमःशिरसि ॥ अनुष्टुप्छंदसेनमोमुखे ॥ श्रीसदाशिवदेवतायैनमोहृदि ॥
ॐ नंतत्पुरुषायनमःहृदये ॥ ॐ मंअघोरायनमःपादयोः ॥ ॐ शिंसद्योजातायनमःगुह्ये ॥
ॐ वांवामदेवायनमःमूर्ध्नि॥ ॐ यंईशानायनमः मुखे ॥ ॐ ॐहृदयायनमः ॐ नंशिरसेस्वाहा
ॐ मंशिखायैवषट् ॐ शिंकवचायहुं ॐ वांनेत्रत्रयायवौषट् ॐ यं अस्त्रायफट्॥ कलशपूजादि

संभारप्रोक्षणांते ॥ ॐ त्र्यंबकंयजामहे० ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाक ल्पोज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंवि श्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ इतिदेवंध्यात्वा ॥ प्राणप्रतिष्ठांकृत्वास्थाप्यलिं गंस्पृशन् ॥ सहस्रशीर्षा० ॐ भूःपुरुषंसांबसदाशिवमावाहयामि ॐ भुवःपुरुषंसांब० ॐ स्वःपुरु षंसांब० ॐ भूर्भुवःस्वःपुरुषंसांब० इत्यावाहयेत् ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव ॥ इतिपुष्पांजलिंदद्यात् ॥ ( आवाहनाद्युपचारेषुवैदि कपौराणमंत्रसमुच्चयोपीच्छयाकार्यः ॥ स्थावरलिंगेपूर्वसंस्कृतचरलिंगेचप्राणप्रतिष्ठाद्यावाहनांतं नकार्यं ) ॥ पुरुषएवेदं० ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॐ नमःशिवायश्री सांबसदाशिवायनमःआसनं ॥ एवमग्रेपिपंचाक्षरादिपाठः ॥ ( स्त्रीशूद्रश्चेत् ॐ नमःशिवाये तिपंचाक्षरीस्थाने श्रीशिवायनमइतिनमोंतमंत्रेणपूजयेत् ) एतावानस्य० ॐ भवेभवेनाति भवेभवस्वमां ॐ नमःशिवायश्रीसांबसदाशिवायनमःपाद्यं ॥ त्रिपादूर्ध्व० ॐ भवोद्भवायनमः ॐ नमःशिवायश्रीसांबस० अर्घ्यं० ॥ तस्माद्विराळ० ॐ वामदेवायनमः ॐ नमःशिवायश्री सांब० आचमनं० ॥ यत्पुरुषेण० ॐ ज्येष्ठायनमः ॐ नमःशिवाय० स्नानं ॥ ततोमूलमंत्रेण आप्यायस्वेत्यादिभिश्चपंचामृतैःसंस्नाप्य ॥ मूलेनाभ्यंगोष्णोदकगंधोदकस्नानेचकृत्वा ॥ आ

पोहिष्ठेतितिसृभिःशुद्धोदकेनप्रक्षाल्यततःपूर्वपूजांतेएकादशावृत्त्यैकावृत्त्यावारुद्रेणपुरुषसूक्तेन
चचंदनकुंकुमकर्पूरवासितजलेनाभिषेकंकृत्वा ॐ नमःशिवायेतिस्नानांतेआचमनंदत्वासाक्षतज
लेनतर्पणंकार्यं ॥ ॐ भवंदेवंतर्पयामि १ शर्वंदेवंतर्पयामि २ ईशानंदेवंतर्पयामि ३ पशुपतिं
देवंतर्पयामि ४ उग्रंदेवंत० ५ रुद्रंदेवंत० ६ भीमंदेवंत० ७ महांतंदेवंत० ८ ॥ भवस्यदेव
स्यपत्नींतर्पयामि शर्वस्यदेवस्यप० ईशानस्यदेवस्यप० पशुपतेर्देवस्यप० उग्रस्यदेवस्यप० रुद्र
स्यदेवस्यप० भीमस्यदेवस्यप० महतोदेवस्यप० ८ ॥ तंयज्ञंबर्हिषि ॐ ज्येष्ठायनमः ॐ नमः
शिवायश्रीसांब० वस्त्रं० ॥ मूलेनाचमनं ॥ तस्माद्यज्ञा० ॐ रुद्रायनमः ॐ नमःशिवाय० यज्ञो
पवीतं० मूलेनाचमनं॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॐ कालायनमः ॐ नमःशिवाय० चंदनं० ॥
ॐ कलविकरणायनमः ॐ नमःशिवायश्री० अक्षतान्० ॥ तस्मादश्वा० ॐ बलविकरणायनमः
ॐ नमःशिवायश्रीसांब० पुष्पाणि० ॥ सहस्रमष्टोत्तरशतंवासहस्राष्टोत्तरनामभिर्मूलमंत्रेणवाबि
ल्वपत्राण्यर्पयेत् ॥ यत्पुरुषं० ॐ बलायनमः ॐ नमःशिवायश्रीसांब० धूपं० ॥ ब्राह्मणोस्य०
ॐ बलप्रमथनायनमः ॐ नमःशिवायश्रीसांब० दीपं० ॥ चंद्रमामनसो० ॐ सर्वभूतदमना
यनमः ॐ नमःशिवाय० नैवेद्यं० ॥ मूलेनाचमनंफलंच ॥ ॐ मनोन्मनायनमः ॐ नमःशि
वाय० तांबूलं० मूलेनदक्षिणां० ॥ मूलेनवैदिकैर्मंत्रैश्चनीराजनं० ॥ नाभ्याआसी० ॐ नमः

शिवाय०प्रदक्षिणाः ॥ सप्तास्यांसन्० भवायदेवायनमः शर्वायदेवायेत्याद्यष्टौ भवस्यदेवस्यप
त्न्यै इत्यष्टौच नमस्कारान्कृत्वातैरेवपुष्पांजलिः ॥ अथवा यज्ञेनयज्ञ० ईशानःसर्वविद्यानामी
श्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॐ नमःशिवाय० मंत्र
पुष्पं० ॥ शिवायनमः रुद्राय० पशुपतये० नीलकंठाय० महेश्वराय० हरिकेशाय० विरूपाक्षा
य० पिनाकिने० त्रिपुरांतकाय० शंभवे० शूलिने० महादेवायनमःइतिद्वादशनामभिर्द्वादशपु
ष्पांजलीन्दत्वा मूलेनप्रदक्षिणानमस्कारान्कृत्वा शिवरात्रिव्रतंदेवपूजाजपपरायणः ॥ करोमि
विधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ त
त्सर्वंपरमेशानमयातुभ्यंसमर्पितं ॥ इतिपूजांसमर्प्यस्तोत्रेणप्रणम्य मूलमंत्रमष्टोत्तरशतंजप्त्वा ॥
गुह्यातिगुह्यगोप्तात्वंगृहाणास्मत्कृतंजपं ॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादान्महेश्वर ॥ इतिजपंनि
वेद्य ॥ यत्किंचित्कुर्महेदेवसदासुकृतदुष्कृतं ॥ तन्मेशिवपदस्थस्यभुंक्ष्वक्षपयशंकर ॥ शिवोदा
ताशिवोभोक्ताशिवःसर्वमिदंजगत् ॥ शिवोजयतिसर्वत्रयःशिवःसोहमेवहि ॥ इतिप्रार्थ्य ॥ देवहृ
दयस्थंपादस्थंचपुष्पमादायप्रणम्य देवेनदत्तमितिध्यात्वा ॥ प्रपन्नंपाहिमामीशभीतंमृत्युमहार्ण
वात् ॥ त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ॥

इतिमूर्ध्निंधृत्वा मंत्रहीनंक्रियाहीनमित्यादिभिःक्षमापयित्वा ॥ अनेनपूजनेनसांबसदाशिवःप्री
यतामितिनिवेदयेत् ॥ इतिकेवलशिवरात्रिव्रतपूजाविधिःसमाप्तः ॥ ॥ ७ ॥

यामेषुपूजाचतुष्टयेविशेषः ॥ तत्रप्रथमयामेमूलमंत्रांतेश्रीशिवायासनंसमर्पयामीतिशिव
नाम्नासर्वोपचारसमर्पणम् ॥ द्वितीययामेशिवरात्रौद्वितीययामपूजांकरिष्यइतिसंकल्प्यश्रीशंक
रायासनमितिशंकरनाम्ना ॥ ततोमहानिशिनिशीथपूजांकरिष्यइतिसंकल्प्यश्रीसांबसदाशिवाया
सनमितिपूर्ववत्पूजा ॥ ततस्तृतीययामपूजांकरिष्यइत्युक्त्वाश्रीमहेश्वरायासनमित्यादि ॥ एव
मेवचतुर्थयामेश्रीरुद्रायेतिरुद्रनाम्नापूजनं ॥ प्रतियामंतैलाभ्यंगपंचामृतोष्णोदकशुद्धोदकगंधो
दकाभिषेकाःकार्याः ॥ यज्ञोपवीतांतेगोरोचनकस्तूरीकुंकुमकर्पूरागुरुचंदनमिश्रितानुलेपेनालिंगं
लेपयेत् ॥ पंचविंशतिपलमितःसर्वोनुलेपइत्यनुलेपपरिमाणं यथाशक्तिवा ॥ धत्तूरकरवीरा
म्रकुसुमैर्बिल्वपत्रैश्चपूजनमतिप्रशस्तं ॥ पुष्पाभावेशालितंडुलगोधूमयवैःपूजा ॥ नैवेद्योत्तरंतां
बूलमुखवासौउक्तौ ॥ नागवल्लीपत्रक्रमुकफलशुक्त्यादिचूर्णेतित्रयंतांबूलसंज्ञं ॥ एतदेवनारिके
लकर्पूरैलाकंकोलैःसहितंमुखवाससंज्ञं ॥ शालिपिष्टनिर्मितैःषड्विंशतिघृतदीपैर्नीराजनं ॥ लिंगमू
र्ध्निदध्यक्षतपुष्पदूर्वागोरोचनसर्षपयुतस्वर्णपद्मनिवेदनं ॥ एतेषामन्यतमद्रव्यालाभेतत्तद्द्रव्यंस्म
रेद्बुधः ॥ सर्वपूजांतेप्रार्थना ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ तत्सर्वंपरमेशानमया

तुभ्यंसमर्पितमिति ॥ एवंयामचतुष्टयेर्घ्यभेदःकौस्तुभे ॥ सचेत्थं ॥ चंदनाक्षतदूर्वांकुशफलयुत
मर्घ्यंप्रतियामंदद्यात् ॥ तत्रप्रथमयामेमंत्रः ॥ नमःशिवायशांतायसर्वपापहरायच ॥ शिवरात्रौ
मयादत्तंगृहाणार्घ्यंममप्रभो ॥ द्वितीये-मयाकृतान्यनेकानिपापानिहरशंकर ॥ गृहाणार्घ्यमुमा
कांतशिवरात्रौप्रसीदमे ॥ महानिशि ( निशीथे )-शिवरात्रिव्रतंदेवपूजाजपपरायणः ॥ करो
मिविधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ तृतीये-दुःखदारिद्र्यभारैश्चदग्धोहंपार्वतीपते ॥ त्रायस्व
मांमहादेवगृहाणार्घ्यंनमोस्तुते ॥ चतुर्थे-किंनजानासिदेवेशत्वयिभक्तिंप्रयच्छमे ॥ स्वपादाग्र
तलेदेवदास्यंदेहिजगत्पते ॥ ततःपूजानिवेदनं ॥ मंत्रस्तु ॥ नमोयज्ञजगन्नाथनमस्त्रिभुवनेश्वर ॥
पूजांगृहाणमेदत्तांमहेशप्रथमेपदे ॥ इतिप्रथमयामे ॥ पूर्वेनंदिमहाकालौगणभृंगीचदक्षिणे ॥
वृषस्कंदौपश्चिमेतेदेशकालौतथोत्तरे ॥ गंगाचयमुनापार्श्वेपूजांगृह्णनमोस्तुते ॥ इतिद्वितीये ॥
नमोव्यक्तायसूक्ष्मायनमस्तेत्रिपुरांतक ॥ पूजांगृहाणदेवेशयथाशक्त्युपपादितां ॥ इतितृतीये ॥
बद्धोहंविविधैःपाशैःसंसारभयबंधनैः ॥ पतितंमोहजालेमांत्वंसमुद्धरशंकर ॥ इतिचतुर्थे ॥ अ
न्यत्समानं ॥ यामचतुष्टयेपिनृत्यगीतकथाश्रवणादिनाजागरणंकार्यं ॥ ततःप्रभातेस्नात्वापुनः
शिवंसंपूज्य पूर्वोक्तद्वादशनामभिर्द्वादशब्राह्मणानशक्तावेकंवासंपूज्यतिलपक्वान्नपूर्णान्द्वादशकुं
भानेकंवादत्वाव्रतमर्पयेत् ॥ यन्मयाद्यकृतंपुण्यंतद्रुद्रस्यनिवेदितं ॥ त्वत्प्रसादान्मयादेवव्रतम

द्यसमापितं ॥ प्रसन्नोभवमेश्रीमन्सद्गतिःप्रतिपाद्यतां ॥ त्वदालोकनमात्रेणपवित्रोस्मिनसंशयः ॥
इति ततोब्राह्मणान्भोजयित्वापूर्वनिर्णीतेकालेस्वजनैःसहपारणंकुर्यात् ॥ तत्रमंत्रः ॥ संसारक्ले
शदग्धस्यव्रतेनानेनशंकर ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ इति ॥ दक्षिणांदत्वाशिषो
गृहीत्वाकर्मसमाप्तिः ॥ इति शिवरात्रिव्रतयामचतुष्टयभेदभिन्नःपूजाविधिःसंपूर्णः ॥ ॥ छ ॥

श्रीगणेशाय नमः ॥ ॐ नमः शिवाय ॥ पूर्वी कैलासशिखरावर बसलेला सर्व देवाचा देव पाहून जिचे नेत्र हर्षानें प्रफुल्लित जाहले आहेत अशी पार्वती जगताचा गुरु श्रीशंकर यास प्रश्न करिती झाली. यावेळीं देवाचें ध्यान असें होतें कीं, ज्याला पांच तोंडें, दहा भुज, तीन नेत्र, हातांत शूल, ॥ १ ॥ कपाल, खट्वांग, तलवार, खेटक, पिनाक नांवाचें धनुष्य धारण केलेला

ॐ नमःशिवाय ॥ ॥ कैलासशिखरासीनंदेवदेवंजगद्गुरुं ॥ पंचवक्त्रंदशभुजंत्रिनेत्रंशूलपाणिनं ॥ १ ॥ कपालखट्वांगधरंखड्गखेटकधारिणं ॥ पिनाकपाणिनंभीमंवरदंचाभयप्रदं ॥२॥ भस्मांगव्यालशोभाढ्यंशशांककृतशेखरं (अस्थिमालाविभूषितं)॥ नीलजीमूतसंकाशंसूर्यकोटिसमप्रभं ॥३॥ क्रीडंतंचशिवंतत्रप्रमथादिगणैर्वृतं ॥ विसृज्यदेवताःसर्वास्तिष्ठंतंपरमेश्वरं ॥४॥

मोठा भयंकर; पण वरदान व अभय देणारा ॥ २ ॥ अंगाला भस्मोद्धूलन केलें असून अंगावरील सर्पांनीं शोभणारा, ललाटावर चंद्रकला ( व गळ्यांत कपालमाला ) शोभत आहे. ज्याची मेघाप्रमाणें नीलकांति असून कोटिसूर्यांसारखा देदीप्यमान ॥ ३ ॥ क्रीडा करीत असून प्रमथादि गणांनीं वेष्टित आहे व देवता वगैरे जवळ कोणी नाहीं, एकटा बसलेला आहे ॥ ४ ॥

जो सर्व देवांचाही ईश व सर्व लोकांचें कल्याण करणारा आपला पति अशा शंकराला पार्वती ह्मणते ॥ ५ ॥ हे देवेशा शंकरा, जें व्रत केलें असतां सर्व पापें नष्ट होतात असें उत्तम व्रत गुप्त असलें तरी कृपा करून मला सांगा ॥ ६ ॥ मी आपणाकडून पुष्कळ व्रतें तिथींचे

दृष्ट्वातुदेवदेवेशंप्रहर्षोत्फुल्ललोचना ॥ गौरीप्रोवाचभर्तारंशंकरंलोकशंकरं ॥ ५ ॥ ॥ देव्युवाच ॥ कथयत्वंप्रसादेनयद्गोप्यंव्रतमुत्तमं ॥ यत्कृत्वा देवदेवेशपापहानिःप्रजायते ॥ ६ ॥ श्रुतानिहिमयात्वत्तोव्रतानितिथिनिर्णयः ॥ तपांसिदानधर्माश्चतीर्थधर्माअनेकशः ॥ ७ ॥ नास्तिमेनिश्चयस्तत्रभ्रामिताहंत्वयापुनः ॥ तस्माद्वदस्वमेदेवएकंनिःसंशयंव्रतं ॥ सर्वपापक्षयकरंभुक्तिमुक्तिप्रदायकं ॥ ८ ॥ ॥

निर्णय, अनुष्ठानें, दानें, धर्मकृत्यें, नानाप्रकारच्या तीर्थयात्रा ऐकल्या ॥ ७ ॥ परंतु आपण मला भ्रांति उत्पन्न केल्यामुळें त्या कृत्यांवर माझा विश्वास नाहीं, याकरतां निःसंशय असें सर्व पापांचा क्षय करणारें व भोग आणि मोक्ष देणारें असें एक व्रत मला सांगा. ॥ ८ ॥

हें ऐकून शिव ह्मणाले, हे पार्वति, जें अत्यंत गुप्त, जें मनुष्याला भोग मोक्ष देणारें असून आजपर्यंत कोणाला सांगितलेलें नाहीं असें व्रतांमध्यें उत्तम व्रत तुला सांगतों ऐक ॥ ९ ॥ हे प्रिये, ज्याच्या श्रवणमात्रानें सर्व पापें नाश पावतात तें तुला सांगतों, एकाग्रचित्तानें

शिवउवाच ॥ ॥ शृणुदेविपरंगुह्यंव्रतानामुत्तमंव्रतं ॥ यन्नकस्यचिदाख्यातंभुक्तिमुक्तिप्रदंनृणां ॥ ९ ॥ यस्यश्रवणमात्रेणपातकंविलयंव्रजेत् ॥ तदहंकीर्तयिष्यामिश्रृणुचैकमनाःप्रिये ॥ १० ॥ माघांतेबहुलेपक्षेत्वविद्धायाचतुर्दशी ॥ शिवरात्रिस्तुसाज्ञेयासर्वयज्ञोत्तमोत्तमा ॥ ११ ॥ दानयज्ञतपोभिश्चव्रतैर्बहुविधैरपि ॥ तीर्थैरपिनतत्पुण्यंयत्पुण्यंशिवरात्रितः १२

ऐक ॥ १० ॥ माघमासाच्या कृष्णपक्षांतील विद्ध नसलेली जी चतुर्दशी तिला शिवरात्रि ह्मणतात. ही सर्व यज्ञांहून उत्तमोत्तम आहे ॥ ११ ॥ या शिवरात्रिव्रतानें जें पुण्य प्राप्त होतें तें, नानाप्रकारचीं दानें, यज्ञ, तपश्चर्या व अनेक व्रतें यांनीं प्राप्त होत नाहीं ॥ १२ ॥

शिवरात्रीसारखें पापांचा नाश करणारें दुसरें व्रतच नाहीं. हें व्रत जाणून घडो अथवा अज्ञानानें घडो त्यानें मोक्षप्राप्ति होते ॥ १३ ॥ ज्यांनीं हें व्रत केलें नसेल ते मेल्यानंतर नरकाला जातात व ज्यांनीं केलें असेल ते मुक्त होत्साते शिवलोकाला जातात. ॥ १४ ॥ हे वरानने, ही शिवरात्रि सर्वमंगलकारिणी असून सर्व अशुभांचा नाश करणारी व भोग-

शिवरात्रिसमंनास्तिव्रतंपापविनाशनं ॥ ज्ञानादज्ञानतोवापिकृत्वायन्मोक्षमाप्नुयात् ॥१३॥ मृतास्तेनरकंयांतियैरेषानकृताक्वचित् ॥ यैःकृतानिरयान्मुक्तागतास्तेशिवसंनिधौ ॥ १४ ॥ सर्वमंगलशीलासासर्वाशुभविनाशिनी ॥ भुक्तिमुक्तिप्रदाचैषासत्यंसत्यंवरानने ॥१५॥ ॥ देव्युवाच ॥ कथंयमपुरीमार्गंत्यक्त्वास्वर्गंव्रजेन्नरः ॥ एतन्मेमहदाश्चर्यंप्रत्ययंकुरुशंकर ॥१६॥

मोक्ष देणारी हें सत्य आहे ॥ १५ ॥ पार्वती ह्मणाली हे शंकरा, या व्रतानें मनुष्य यमपुरी टाकून स्वर्गाला कसा जातो याचें मला मोठें आश्चर्य वाटतें, तरी कृपा करून अनुभव येईल असें सांगा ॥ १६ ॥

शिव ह्मणाले हे देवि, यमाच्या शिक्षेपासून दूर करणारी आणि शिवलोक देणारी असी पूर्वी घडलेली पौराणिक कथा तुला सांगतों, ऐक. ॥ १७ ॥ पूर्वीच्या कल्पांत प्रत्यंत देशांतील पर्वताच्या मूलप्रदेशांत राहणारा एक व्याध असून तो मोठा मांसप्रिय होता ॥ १८ ॥

शिवउवाच ॥ ॥ श्रृणुदेवियथावृत्तांकथांपौराणिकींशुभां ॥ यमशासनहंत्रींचशिवशासनदायिनीं ॥ १७ ॥ कश्चिदासीत्पुराकल्पेनिषादआमिषप्रियः ॥ प्रत्यंतदेशवासीचभूधरासन्नभूचरः ॥ १८ ॥ सीमांतेसर्वदातिष्ठन्कुटुंबपरिपालकः ॥ तन्वापीनोधनुर्धारीश्यामांगःकृष्णकंचुकः ॥ १९ ॥ बद्धगोधांगुलित्राणःसदैवमृगयारतः ॥ एवंविधोनिषादोसौचतुर्दश्यांदिनोदये ॥ २० ॥ ॥ ॥

हा निरंतर सीमेवर राहून आपल्या कुटुंबाचें पालन करीत असे. हा शरीरानें पुष्ट, धनुर्धारी, वर्णानें काळा व काळें चिलखत धारण केलेला ॥ १९ ॥ बद्धगोधांगुलित्राण ( चर्माचे हातमोजे घातलेला ) असून सदैव मृगयेविषयीं आसक्त असे. अशा तऱ्हेच्या त्या व्याधाला

चतुर्दशीच्या सूर्योदयीं ॥ २० ॥ द्रव्याकरितां वाण्यांनीं शिवाच्या मंदिरांत कोंडून ठेवला त्यामुळें त्याला देवाचें दर्शन घडलें व उपोषण केलेल्या भक्तांचें सदोदित शिव शिव या अक्षरांचें श्रवणही घडलें. संध्याकाळीं त्याचें द्रव्य वगैरे देऊन त्याला सोडला ॥ २१ ॥ २२ ॥

सद्द्रव्यार्थंवणिग्भिस्तुशिवागारेप्ररोधितः ॥ तेनापिदेवताद्दृष्टाजनानांवच नंश्रुतं ॥ २१ ॥ उपवासरतानांतुशिवशिवेतिजल्पतां ॥ दिनांतेसचतै र्मुक्तःप्रातर्द्रव्यंप्रदीयतां ॥ २२ ॥ ततोसौधनुरादायदक्षिणेनगतःस्वयं ॥ आससादवनोद्देशंजनहासंचकारह ॥ २३ ॥ शिवशिवकिमेतद्वैवदंतिन गरेजनाः ॥ वनेचरोनिरीक्षंश्चचतुर्दिशमितस्ततः ॥ २४ ॥ ॥

नंतर तो धनुष्य घेऊन दक्षिणमार्गानें निघाला आणि अरण्याच्या समीपभागीं राहून लोकांचा उपहास करूं लागला ॥ २३ ॥ तो ह्मणतो आज नगरामध्यें सर्व लोक शिव शिव अशी गर्जना करतात तें काय ? असें ह्मणून पुनः तो वनचर इकडे तिकडे चारी दिशा पाहत ॥ २४ ॥

हरिण, सूकर, चितळे यांच्या पावलटीवरून लुब्धचित्त होऊन इकडे तिकडे धांवत असतां ॥ २५ ॥ तसेंच पर्वतासह अरण्यांत परिभ्रमण करीत असतां संध्याकाळ झाला, तथापि आलेल्या मृगांच्या जाति जाळ्यांत न सांपडतां पळाल्या ॥ २६ ॥ मृग, डुकर, चितळ हे तर कोठें आलेले सुद्धां दिसेनात ह्मणून तो व्याध अगदीं निराश झाला व एवढ्यांत सूर्य

पदंचपदमार्गंचमृगसूकरचित्तलान् ॥ धावतस्तस्यसर्वासुदिक्षुवैलुब्धचेतसः ॥ २५ ॥ वनंसपर्वतंसर्वंभ्रमतस्तुदिनंगतं ॥ अप्राप्ताएवगच्छंतिसकलामृगजातयः ॥ २६ ॥ संप्राप्तमपिनापश्यन्मृगसूकरचित्तलं॥ निराशोलुब्धकोयावत्तावदस्तंगतोरविः ॥ २७ ॥ चिंतयित्वाजलोपांतेजागरंजीवघातनं ॥ संविधास्याम्यहंरात्रौनिश्चितंममजीवनं ॥२८॥ तडागसंनिधौगत्वातत्तीरेजालमध्यतः॥ निलयंकर्तुमारेभआत्मनोगुप्तिकारणात्॥२९॥

अस्तास गेला ॥ २७ ॥ तेव्हां व्याधानें विचार केला कीं रात्रौ जलाशयाच्या आसपास राहून पाण्यासाठीं येतील तेवढे जीव मारीन व त्यांनीं खरोखर मी आपली उपजीविका करीन ॥ २८ ॥ असें ह्मणून एका सरोवराच्या जवळ गेला आणि तीरावर जाळें पसरलें

आणि त्याच्या मध्यभागीं आपल्याला गुप्तरूपानें राहतां येईल असें स्थल पाहूं लागला. ॥ २९ ॥ तों त्या जाळ्याच्या मध्यभागीं मोठें स्वयंभु लिंग होतें व जवळच एक मोठा थोरला बेलाचा वृक्ष होता ॥ ३० ॥ त्याच्यावर तो व्याध बसला आणि पाण्याकरितां येणाऱ्या जनावरांचा मार्ग स्पष्ट दिसावा ह्मणून बेलाचीं पानें तोडून दक्षिणेला फेंकूं

जालमध्येमहालिंगमस्तिस्वायंभुवंशुभं ॥ बिल्ववृक्षोमहान्दिव्यआसीत्त
त्रैवसंस्थितः ॥ ३० ॥ आदायतस्यपत्राणिप्राक्षिपन्मार्गशोधने ॥
क्षिप्तानिदक्षिणेतानिनिपेतुर्लिंगमूर्धनि ॥ ३१ ॥ नदिवाभोजनंजातंसं
निरोधप्रभावतः ॥ मृगान्निरीक्षतस्तस्यनिद्रानाशोऽप्यभून्निशि ॥ ३२ ॥

लागला, तीं अनायासें त्या लिंगाच्या मस्तकावर पडूं लागलीं ॥३१॥ व्याधाला त्या दिवशीं कोंडून ठेवल्यामुळें दिवसा भोजन मिळालें नाहीं ( उपोषण घडलें ) व मृगांच्या शोधाखाल रात्रौ जाग्रण घडलें ॥ ३२ ॥

हे वरानने, त्या व्याधाच्या अंगाचा दुर्गंध पसरला होता त्यामुळें बाणाच्या भीतीनें मृग त्याच्या आसपाससुद्धां आले नाहींत ॥ ३३ ॥ याप्रमाणें झाळीमध्यें रात्रीचा पहिला प्रहर निघून गेला. नंतर तेथें एक हरिणी गर्भार असल्यामुळें हळू हळू चालत आहे ॥ ३४ ॥

तस्यगंधंसमासाद्यलुब्धकस्यवरानने ॥ नोपतिष्ठंतिचमृगाःशरघातभये नतं ॥ ३३ ॥ बिल्वजालगतस्यैवंप्रथमःप्रहरोगतः ॥ ततोजलार्थमाया ताहरिणीगर्भमंथरा ॥ ३४ ॥ निरीक्षंतीदिशःसर्वाउत्फुल्लनयनाभृशं ॥ लुब्धकेनाथसादृष्टाशरगोचरतांगता ॥ ३५ ॥ कृतंचशरसंधानंतेनैकाग्रे णचेतसा ॥ त्रोटित्वाबिल्वपत्राणिप्रक्षिप्तानिशिवोपरि ॥ ३६ ॥ शिवंदेवंसदा दध्यौशीतेनपरिपीडितः ॥ एतस्मिन्नंतरेदृष्टोहरिण्यालुब्धकस्तदा ॥ ३७ ॥

व ती अत्यंत प्रफुल्लनेत्रांनीं दशदिशांकडे पाहत बाण मारण्याच्या योग्यस्थलीं आलेली व्याधानें पाहिली ॥ ३५ ॥ आणि तिरकमठा सांवरून शरसंधान केलें व एकाग्रचित्तानें बिल्वपत्रें तोडून शिवावर टाकलीं ॥ ३६ ॥ तो व्याध थंडीनें पीडित असून शिवाचें ध्यान करीत

होता. एवढ्यामध्यें त्या हरिणीनेंही त्या व्याधाला पाहिला ॥ ३७ ॥ तो स्वरूपानें कृतांतासारखा बसलेला असून त्याचें शरसंधान यमदंष्ट्रप्रमाणें भयंकर आहे असें पाहून ती मृगी दिव्यवाणीनें व्याधाला ह्मणाली ॥ ३८ ॥ हे व्याधा, हे सर्व जीवांच्या घातका, जरा स्वस्थ राहा, तूं मला कां मारतोस याचें कारण पहिल्यानें सांग ॥ ३९ ॥ व्याध ह्मणाला

लुब्धकस्तुस्वरूपेणकृतांतइवतिष्ठति ॥ दृष्ट्वाचतस्यसंधानंयमदंष्ट्रासमप्रभं ॥ मृगीसादिव्ययावाचालुब्धकंवाक्यमब्रवीत् ॥ ३८ ॥ ॥ मृग्युवाच स्थिरोभवमहाव्याधसर्वजीवनिकृंतन ॥ हनिष्यसिकिमर्थंमांकथयस्वमम प्रभो ॥ ३९ ॥ व्याधउवाच ॥ समातृकंकुटुंबंमेक्षुधयापीड्यतेभृशं ॥ धनंचमद्गृहेनास्तितेनत्वांहन्मिशोभने ॥ ४० ॥ सूतउवाच ॥ यामपूजाप्रभावेणजागरोपोषणेनच ॥ चतुर्थांशेनपापानांविमुक्तोलुब्धकस्तदा ॥ ४१ ॥

हे शोभने मृगि, आईसह माझें सर्व कुटुंब क्षुधेनें अत्यंत पीडित झालें आहे. कुटुंबपोषणाला द्रव्य तर माझे घरीं नाहीं ह्मणून कुटुंबपोषणाकरितां तुला मारतों ॥ ४० ॥ सूत ह्मणतात यामपूजेच्या प्रभावानें, जागरणानें व उपोषणानें व्याधाचीं एक चतुर्थांश पातकें गेलीं ॥ ४१ ॥

आणि तो लुब्धक तर, ही हरिणी असून मनुष्याप्रमाणें भाषण करीत आहे ह्मणून आश्चर्य-चकित होऊन धर्माला स्मरून बोलूं लागला ॥४२॥ व्याध ह्मणतो, मी आजपर्यंत उत्तम, मध्यम, कनिष्ठप्रतीचे असे असंख्य जीव मारले परंतु श्वापदांमध्यें अशा तऱ्हेची वाणी मात्र कधीं

लुब्धकस्तुततोदृष्ट्वामृगींमानुषभाषिणीं ॥ आश्चर्यंपरमंप्राप्तःप्राहधर्मसमन्वितं ॥ ४२ ॥ ॥ व्याधउवाच ॥ मयाहिघातिताजीवाउत्तमाधममध्यमाः ॥ नश्रुतात्वीदृशीवाणीश्वापदानांकदाचन ॥ ४३ ॥ कस्मिन्देशेत्वमुत्पन्नाकस्मात्स्थानादिहागता॥ कथयस्वसमासेनपरंकौतूहलंहिमे॥४४॥ ॥ मृग्युवाच ॥ शृणुत्वंलुब्धकश्रेष्ठकथयामितवाखिलं ॥ आसंपूर्वमहंरंभास्वर्गेशक्रस्यचाप्सराः ॥ ४५ ॥ ॥

ऐकली नाहीं ॥ ४३ ॥ हरिणीला ह्मणतो हे मृगि, कोणत्या देशांत तूं उत्पन्न झालीस, कोठून येथें आलीस हें सर्व सांग. मला मोठें कौतुक वाटतें ॥ ४४ ॥ मृगी ह्मणाली, हे व्याधश्रेष्ठा, माझा सर्व इतिहास तुला सांगतें ऐक. मी पूर्वी स्वर्गावर इंद्राची अप्सरा होतें.

॥ ४५ ॥ अनुपम रूप, लावण्य व सौभाग्य यांनीं मी अत्यंत गर्वित होतें तेथें सौभाग्याच्या मदानें पुष्टांग व आपल्या सामर्थ्याचा गर्व वाहणारा असा एक दानव ॥ ४६ ॥ हिरण्याक्ष नांवाचा असून तो मी पति वरला होता, व त्याच्याशीं सवहर्तमान मीं यथेच्छ भोग भोगले

अनंतरूपलावण्यासौभाग्येनचगर्विता ॥ सौभाग्यमदपुष्टांगोदानवोब लदर्पितः ॥ ४६ ॥ मयैवसकृतोभर्ताहिरण्याक्षोमहासुरः ॥ तेनसार्धंम याभुक्तंचिरकालंयथेप्सितं ॥ ४७ ॥ अन्यस्मिन्दिवसेव्याधक्रीडंत्याअसु रेणमे ॥ गतोबहुतरःकालोमहादेवस्यकोपकृत् ॥४८॥ प्रत्यहंप्रेक्षणंनृत्यं शंकरस्याग्रतश्चरे॥यावद्गच्छाम्यतस्तत्रतावद्रुद्रोऽब्रवीद्रुषा ॥४९॥ हेरंभेक्क गतासित्वंकेनवासंगताशुभे॥ किंवासौभाग्यगर्वेणनागताममंदिरं॥५०॥

॥ ४७ ॥ हे व्याधा, एके दिवशीं क्रीडा करीत असतां बराच उशीर झाला व तेणेंकरून शंकराला क्रोध आला ॥ ४८ ॥ कारण, मी दररोज शंकरापुढें प्रेक्षणीय असें नृत्य करीत असें. एके दिवशीं थोड्या उशिरां जातांच शंकर रागानें ह्मणाले ॥४९॥ हे रंभे, तूं कोणाबरोबर

व कोठें गेली होतीस, अथवा आपल्या सौंदर्याच्या गर्वानें माझ्या मंदिरांत वेळीं आली नाहींस ॥ ५० ॥ जें खरें असेल तें मला लवकर सांग. नाहींपेक्षां तुला शाप देतों, तेव्हां शापाच्या भीतीस्तव शंकरापुढें उशीर लागण्याचें कारण खरें सांगितलें. ॥ ५१ ॥ कीं हे शाप व अनुग्रह समर्था देवा, ऐक. माझा भर्ता प्राणांहून प्रिय महाबलवान् दैत्य आहे.



शीघ्रंकथयसत्यंमेनोचेच्छापंददामिते ॥ शापभीत्यामयातत्रसत्यमुक्तंशिवाग्रतः ॥ ५१ ॥ शृणुदेवप्रवक्ष्यामिशापानुग्रहकारक ॥ ममभर्तासमःप्राणैर्दानवेंद्रोमहाबलः ॥ ५२ ॥ तेनसार्धंमयादेवक्रीडितंनिजमंदिरे ॥ तस्यभोगेनलुब्धाहंशयनादेवनोत्थिता ॥ ५३ ॥ तेनाहंनागताशीघ्रंसृष्टिसंहारकारक ॥ रुद्रस्तद्वचनंश्रुत्वासकोपोवाक्यमब्रवीत् ॥ ५४ ॥

॥ ५२ ॥ त्याच्यासह मी आपल्या घरीं क्रीडा करीत होतें. त्याच्या संभोगसुखांत तल्लीन असल्यामुळें देवा, शयनापासून लवकर उठलें नाहीं. ॥ ५३ ॥ हे सृष्टिसंहार करणाऱ्या देवा, यामुळें मला येण्यास उशीर लागला. हें भाषण ऐकून क्रुद्ध होऊन शंकर ह्मणाले ॥५४॥

तो नित्य कामातुर असणारा हिरण्याक्ष दैत्य अरण्यांत हरिण होईल व तूं त्याची भार्या होसील ॥ ५५ ॥ ज्यापेक्षां स्वर्गस्थ देवांला सोडून दैत्याशीं रममाण होतेस त्यापेक्षां निर्जल अशा वनप्रदेशांत तृण भक्षण करणारी तूं होसील ॥ ५६ ॥ हे भद्रे, हा शाप तुला बारा

मृगःकामातुरोनित्यंहिरण्याक्षोभविष्यति ॥ त्वंमृगीतस्यभार्याचभविष्य सिमहावने ॥५५॥ त्यक्त्वास्वर्गेयतोदेवान्दानवंभोक्तुमिच्छसि ॥ तस्मात्त्वं निर्जलेदेशेतृणाहाराभविष्यसि ॥ ५६ ॥ द्वादशाब्दानिभोभद्रेभविताशाप एषते ॥ परस्परस्यशोकेनशापांतोहिभविष्यति ॥ ५७ ॥ अनुग्रहःकृतश्चैष शंकरेणयदृच्छया ॥ यदाकश्चिद्व्याधवरोममसांनिध्यमाश्रितः॥५८॥बाणा ग्रेतस्यसंप्राप्तापूर्वजन्मस्मरिष्यसि ॥ शंकरस्यततोरूपंदृष्ट्वामोक्षमवाप्स्यसि५९

वर्षें भोगावा लागेल व शेवटीं एकमेकांच्या शोकानें शापाचा अंत होईल. ॥ ५७ ॥ पुनः शंकरानें आपल्याच इच्छेनें असा अनुग्रह केला कीं, ज्या वेळीं कोणीएक व्याधश्रेष्ठ माझ्या सन्निध असून ॥ ५८ ॥ तुझ्यावर शरसंधान करील त्यावेळीं तुला पूर्व जन्माचें स्मरण

होईल व नंतर शंकराचें दर्शन घेऊन मोक्षाला जाशील. ॥ ५९ ॥ असा उःशाप दिला असतां या अरण्यांत शंकर तर कोठें दिसत नाहीं त्यामुळें दुःख वाटतें. माझ्या शरीरांत मेद मांस मुळींच नाहीं. ॥ ६० ॥ आणि मी विशेषतः गर्भाच्या भारानें आक्रांत आहें

शंकरोनमयादृष्टोवसत्यस्मिन्महावने ॥ तेनदुःखमनुप्राप्तामेदोमांसविवर्जिता ॥ ६० ॥ गर्भाक्रांताविशेषेणनवध्यास्मीतिनिश्चितं ॥ सकुटुंबस्य तेनूनंभोजनंनभविष्यति ॥ ६१ ॥ आयास्यतिमृगीत्वन्यामार्गेणानेनलुब्धक ॥ पीनायौवनसंपन्नाबहुमांसामदोद्धता ॥ ६२ ॥ भोजनंसकुटुंबस्य तयानूनंभविष्यति ॥ अथवाऽन्योमृगोव्याधपानार्थंतुजलाशये ॥ ६३ ॥

त्यापेक्षां माझा वध करणें योग्य नाहीं. माझ्या शरीरानें सकुटुंब तुझें पोटही भरणार नाहीं. ॥ ६१ ॥ हे लुब्धका, या मार्गानें दुसरी मृगी तरुणी बहुमांसाची येईल ॥ ६२ ॥ तिच्या योगानें सकुटुंब तुझें यथेच्छ भोजन घडेल. अथवा हे व्याधा, या तळ्यावर पाणी

पिण्याकरितां दुसरा मृग ॥ ६३ ॥ प्रातःकाळीं येईल तो तुझ्या क्षुधाशमनार्थ उपयोगीं पडेल. अथवा मी घरीं जाऊन गर्भ प्रसवून मुलेंबाळें बंधुवर्गाच्या स्वाधीन करून सर्व मैत्रिणींला भेटून पुनः शपथपूर्वक येईन ॥ ६४ ॥ तिचें तें भाषण ऐकून व्याध मनांत आश्चर्यचकित झाला. हिला सोडावी तर कष्ट होतील असा विचार करून त्या हरिणीला

आगमिष्यतिप्रत्यूषेक्षुधार्तस्यनसंशयः ॥ गर्भंमुक्त्वाथवाव्याधबालाना दिश्यबंधुषु ॥ शपथैरागमिष्यामिसंदिश्यचसखीजनं ॥ ६४ ॥ तस्या स्तद्वचनंश्रुत्वाव्याधोविस्मितमानसः ॥ कष्टमेवमितिध्यात्वातामुवाचमृ गांगनां ॥ ६५ ॥ नागमिष्यतियद्यन्यामृगस्त्वमपिगच्छसि ॥ क्षुधयापी डितोहंवैकुटुंबंचविशेषतः ॥ ६६ ॥ ॥

ह्मणतो. ॥ ६५ ॥ कीं जर दुसरी मृगी किंवा मृग आला नाहीं, व हातांत मिळालेली तुलाही सोडली तर फजिती होईल. कारण माझा आत्मा व विशेषतः कुटुंबाचे प्राण क्षुधेनें व्याकुळ होत आहेत ॥ ६६ ॥

असो. प्रातःकाळीं तूं जर माझे घरीं येशील तर ज्या योगानें मला खरें वाटेल अशी शपथ करून जा. ॥ ६७ ॥ पृथ्वी, वायु, सूर्य व सर्व देवता ह्या सत्यावर राहतात त्यापेक्षां इहलोक व परलोक ज्यांना साधावयाचा असेल त्यांनीं सत्य पाळावें. ॥ ६८ ॥ त्याचें

प्रातस्त्वयाममगृहमागंतव्यंयदिध्रुवं ॥ व्रजत्वंशपथंकृत्वायथामेप्रत्ययोभवेत् ॥ ६७ ॥ पृथिवीवायुरादित्यःसत्येतिष्ठंतिदेवताः ॥ पालनीयंततः सत्यंलोकद्वयमभीप्सुभिः ॥ ६८ ॥ तस्यतद्वचनंश्रुत्वागर्भार्तासामृगीतदा ॥ चक्रेसत्यप्रतिज्ञांवैव्याधस्याग्रेपुनःपुनः ॥ ६९ ॥ ॥ मृग्युवाच ॥ द्विजोभूत्वातुयोव्याधवेदभ्रष्टोभिजायते ॥ स्वाध्यायसंध्यारहितःसत्यशौचविवर्जितः ॥ ७० ॥ ॥ ॥

तें भाषण ऐकून गर्भभारानें आक्रांत झालेल्या हरिणीनें सत्य शपथ केली ॥ ६९ ॥ मृगी ह्मणते हे व्याधा, ( पुनः मी जर न येईन तर ) ब्राह्मणजन्म पावलेला असून जो वेदपराङ्मुख, स्वाध्याय, संध्या, सत्य, शौच इत्यादिकांनीं वर्जित, ॥ ७० ॥

विकूं नये तें विकणारा, हवनादि करूं नये त्याचें हवन करणारा अशाला जें पाप तें मला लागेल ॥ ७१ ॥ आणि धूर्त, दुष्ट, शठ याला जें पाप, खोट्या वजनानें फसविणारा, खोटी साक्ष देणारा, दुःशील, निरंतर परदारासक्त, ॥ ७२ ॥ वेदविक्रय करणारा, सुतक्याचे घरीं

अविक्रेयाणांविक्रेताअयाज्यानांचयाजकः ॥ तस्यपापेनलिप्येहंनागच्छामिपुनर्यदि ॥ ७१ ॥ धूर्तेदुष्टेशठेयच्चयत्पापंमानकूटके ॥ कूटसाक्ष्येविशीलेचपरदाररतेसदा ॥ ७२ ॥ वेदविक्रयणेयच्चशवसूतकभोजने ॥ मृतशय्याप्रतिग्राहेपतितेबहुयाजके ॥ ७३ ॥ असच्छास्त्रार्थनिरतेरसविक्रयकारके ॥ तेनपापेन० ॥ ७४ ॥ दानंदातुंप्रवृत्तस्ययोऽतरायकरोनरः ॥ स्वदत्तांपरदत्तांवायोहरेत्सागरांबरां ॥ ७५ ॥ ॥

भोजन करणारा, मृतशय्येचा प्रतिग्रह करणारा, पतित, बहुतांचें होमहवनादि करणारा, ॥ ७३ ॥ पाखंडशास्त्रांत निरत, रसविक्रय करणारा यांला जें पाप तें मला लागेल ॥७४॥ दान देणाराचा जो निषेध करतो, आपण किंवा दुसऱ्यानें दिलेल्या पृथ्वीचें जो हरण करतो

॥ ७५ ॥ देवाचें द्रव्य, गुरूचें द्रव्य व ब्राह्मणाचें द्रव्य जो हरण करतो त्याचें पाप मला लागेल ॥ ७६ ॥ जो दिव्यावर दिवा लावणारा, पायानें पाय घासणारा, आपला भर्ता, धनी, मित्र, अगदीं अर्भक बाळ, ॥ ७७ ॥ गाई, ब्राह्मण, गुरु, स्त्री यांचा घात करणारा, नांग-

देवद्रव्यंगुरुद्रव्यंब्रह्मद्रव्यंहरेच्चयः ॥ तेनपापेन० ॥ ७६ ॥ दीपेनदीपये द्दीपंपादंपादेनधावयेत् ॥ भर्तारंस्वामिनंमित्रमात्मानंबालमर्भकं ॥७७॥ गांविप्रंचगुरुंनारींव्यापादयतिदुर्मतिः ॥ यस्त्रीन्हलेबलीवर्दान्वाहयेद्विष मान्नरः ॥ तेनपापेन० ॥ ७८ ॥ गोरवज्ञांप्रकुर्वंतिदंडेनताडयंतिये ॥ दानस्यकीर्तनेपापंयत्पापंदांभिकेजने ॥ ७९ ॥ असंयतेंद्रियेनित्यंपरदो षानुकीर्तने ॥ कृतघ्नेचकदर्येचनास्तिकेवेदनिंदके ॥ ८० ॥ ॥

राला विषम ( तीन ) बैल जोडणारा, एवढ्यांचीं पापें मला लागतील ॥ ७८ ॥ जे गाईची अवज्ञा करतात, त्यांला दांड्यांनीं मारतात, स्वतः दान दिलेलें वाखाणणारे, दांभिक, ॥७९॥ इंद्रियें स्वाधीन नसणारे, दुसऱ्याची निंदा करणारे, कृतघ्न, कदर्य ( कृपण ), नास्तिक,

वेदनिंदक, ॥ ८० ॥ सदाचार सोडणारा, दुसऱ्याला पीडा देणारा, चाहाडखोर, कन्या विकणारा, ॥ ८१ ॥ दुसऱ्याच्या निंदेनें संतुष्ट, सर्व धर्मानें बहिष्कृत, वृषलीचा (अविवाहित असतां रजोदर्शन झालेल्या स्त्रीचा ) पति, व्याजावर किंवा दिडीच्या धान्यावर चरितार्थ करणारा, आईबापांला न पोसणारा, ॥८२॥ हेतुवादी, बकवृत्ति, श्राद्धें व तीर्थें यांनीं बर्जित

सदाचारविहीनेचपरपीडाप्रदायके ॥ परपैशुन्ययुक्तेचकन्याविक्रयकारके ॥ ८१ ॥ परापवादसंतुष्टेसर्वधर्मबहिर्गते ॥ वृषलीपतौवार्धुषिकेमातापित्रोरपोषके ॥ ८२ ॥ हैतुकेबकवृत्तौचश्राद्धतीर्थविवर्जिते ॥ तेनपापेन० ॥ ८३ ॥ यत्पापंब्रह्महत्यायांपितृमातृवधेतथा ॥ यत्पापंलुब्धकानांचगोचोरविषघातिनां ॥ तेनपापेन० ॥ ८४ ॥ द्विभार्यःपुरुषोयस्तुसमदृष्ट्यानपश्यति ॥ सकृद्दत्वातुयःकन्यांद्वितीयेदातुमिच्छति ॥ ८५ ॥ ॥

यांचीं सर्व पापें मला लागतील ॥ ८३ ॥ ब्रह्महत्येनें जें पाप, पितृमातृवधानें जें पाप, व्याधांला जें पाप, गाई चोरणाराला व विष घालून मारणाला जें पाप तें पाप, मला लागेल. ॥ ८४ ॥ जो पुरुष दोन स्त्रियांचा नवरा असून दोघींला समदृष्टीनें पाहत नाहीं, जो एकवार

एकाला कन्या देण्याचें ठरवून ती दुसऱ्याला देतो ॥ ८५ ॥ ज्याची स्त्री स्वैरिणी (व्यभिचारिणी) आहे, जो आपली कन्या सद्गुणी असून योग्यवर पाहून देत नाहीं ॥ ८६ ॥ स्त्रीपुत्रांला न देतां एकटा मिष्टान्न भक्षण करतो त्याचें पाप मी पुनः न येईन तर मला लागेल

यस्यसंग्रहणीभार्याब्राह्मणीचविशेषतः ॥ आत्मनोगुणसंपन्नांसमानेसदृशेवरे ॥ नददातिचयःकन्यांनरोवैज्ञानदुर्बलः ॥ ८६ ॥ एकाकीमिष्टमश्नातिभार्यापुत्रविवर्जितः ॥ तेनपापेन० ॥ ८७ ॥ मृगीवाक्यंततःश्रुत्वालुब्धकोहृष्टमानसः ॥ मुमोचहरिणींसद्योहित्वाबाणंधनुस्तथा ॥ ८८ ॥ तस्याउक्तिप्रभावेणलिंगार्चाकरणेनच ॥ सपातकचतुर्थांशाद्विमुक्तस्तत्क्षणाद्ध्रुवं ॥ ८९ ॥ ॥ ॥

॥ ८७ ॥ असें मृगीचें भाषण ऐकून तो व्याध प्रसन्न झाला आणि त्यानें धनुष्यबाण ठेवून हरिणीला तत्काळ सोडून दिली ॥ ८८ ॥ तिच्या उक्तिप्रभावानें व लिंगाच्या पूजेनें व्याधाच्या पापाचा एक चतुर्थांश भाग तत्काळ दूर झाला ॥ ८९ ॥

हे पार्वति, दुसरा प्रहर येतांच मध्यरात्रीं शिव शिव असें स्मरण करित असल्यामुळें त्याला झोंप आली नाहीं ॥ ९० ॥ एवढ्यांत दुसरी एक सुंदर हरिणी कामपीडित झालेली व त्रासलेली, भयानें उद्विग्न झालेली असी आपल्या पतीचा शोध करीत तेथें आली ॥ ९१ ॥

द्वितीयेप्रहरेप्राप्तेत्वर्धरात्रेवरानने ॥ स्मरन्शिवशिवेत्येवननिद्रांलब्धवानयं ॥ ९० ॥ द्वितीयाथततःप्राप्ताकामार्तामृगसुंदरी ॥ संत्रस्ताभयसंविग्नाप तिमन्विष्यतीमुहुः ॥ ९१ ॥ जालमध्येस्थितेनाथदृष्टासालुब्धकेनतु ॥ पुनर्बिल्वस्यपत्राणित्रोटयित्वाकरेणतु ॥ क्षिप्तानिदक्षिणेभागेलिंगस्योप रिपार्वति ॥ ९२ ॥ तस्यावधार्थंव्याधेनबाणोधनुषिसंदधे ॥ हर्षपूर्णेनम नसाकुटुंबार्थंजिघांसया ॥ ९३ ॥ ॥ ॥

तिला जाळ्याच्या मध्यभागीं असणाऱ्या व्याधानें पाहिली आणि पुनः बेलाचीं पानें हातांनीं तोडून–हे पार्वति, तीं दक्षिणभागीं टाकलीं तीं लिंगावर पडलीं ॥ ९२ ॥ नंतर तिच्या वधाकरितां व्याधानें हर्षपूर्ण अंतःकरण होऊन धनुष्याला बाण लावला ॥ ९३ ॥

आणि बराबर लक्ष्य पाहून बाण जों टाकणार तेवढ्यांत त्याला हरिणीनें पाहिला तेव्हां ती विह्वल झाली ॥ ९४ ॥ आणि ह्मणते, आजच माझी बहीण व्याधानें मारली त्या दुःखानें मी पीडित आहें. मला तरी वांचून काय कर्तव्य आहे ॥ ९५ ॥ या व्याधाला पाहून

निरीक्ष्यलुब्धकोयावद्बाणंतस्यांविमुंचति ॥ तावन्मृग्याससंदृष्टोदृष्ट्वातं विह्वलाऽभवत् ॥ ९४ ॥ अद्यैवभगिनीमेहिलुब्धकेनविनाशिता ॥ मम किंजीवितव्येनतद्दुःखेनास्मिपीडिता ॥ ९५ ॥ वरंमृत्युर्नशोकोवैदृष्ट्वाव्या धंविशेषतः ॥ एवंसंचिंत्यहरिणीलुब्धकंवाक्यमब्रवीत् ॥ ९६ ॥ धनुर्धरशृणु व्याधसर्वसत्वनिकृंतन ॥ देहिमेवचनंचैकंपश्चात्त्वंमांनिपातय॥९७॥आया ताहरिणीचैकामार्गेणानेनलुब्धक॥ दृष्टात्वयाथवानैषासत्यंकथयसुव्रत॥९८॥

शोकावस्थेंत राहण्यापेक्षां मला मृत्युच श्रेष्ठ वाटतो, असा विचार करून ती हरिणी व्याधाला ह्मणते, ॥ ९६ ॥ हे सर्व जीवांचा नाश करणाऱ्या धनुर्धरा व्याधा, मला एक शब्द बोलूं दे, नंतर तूं पाहिजे तर मार ॥९७॥ हे लुब्धका, सुव्रता, या मार्गानें एक हरिणी आली होती

ती तूं पाहिलीस किंवा नाहीं तें खरें सांग. ॥९८॥ हें तिचें भाषण ऐकून तो व्याध चकित होऊन क्षणमात्र विचार करून ह्मणतो, पहिल्या हरिणीची जसी वाणी होती तसीच हिचीही आहे ॥ ९९ ॥ कदाचित् आपली प्रतिज्ञा पाळण्याकरितां तीच तर पुनः आली

तच्छ्रुत्वालुब्धकस्तत्रविस्मितःक्षणमैक्षत॥ तस्यास्तुयादृशीवाणीअमुष्या अपितादृशी ॥ ९९ ॥ सैवेयमागतानूनंप्रतिज्ञापालनायवै ॥ अथवाऽ न्यासमायातायातयाकथितापुरा ॥ एवंसंचिंत्यमनसालुब्धकोवाक्यमब्र वीत् ॥ १०० ॥ ॥ व्याधउवाच ॥ शृणुत्वंमृगिमेवाक्यंगतासानिजमंदि रं ॥ त्वांदत्वाममनूनंहिसाभवेत्सत्यवागपि ॥ १०१ ॥ अहोरात्रंकृतंकष्टं कुटुंबार्थेमयामृगि ॥ अधुनात्वाहनिष्यामिदेवतास्मरणंकुरु ॥ १०२ ॥

नसेल ! अथवा ती आतां दुसरी येईल ह्मणाली होती ती कदाचित् असेल, असा मनांत विचार करून लुब्धक ह्मणतो ॥ १०० ॥ हे मृगि, सांगतों ऐक. ती आपल्या घरास गेली. ती सत्यवाक् असल्यामुळें तिनेंच तुला पाठविली असावी. ॥ १०१ ॥ हे मृगि, मी कुटुंब-

पोषणाकरितां अहोरात्र कष्ट केले. आता तुला मारतों. देवाचें स्मरण कर ॥ १०२ ॥ हें व्याधाचें भाषण ऐकून हरिणी फार दुःखित झाली आणि रडत त्याला ह्मणते हे व्याधा, मला मारूं नको ॥ १०३ ॥ माझ्या शरीरांत मांस, वसा, मेद, रक्त वगैरे कांहीं नाहीं. विरहाग्नीनें माझें सर्व तेज, बळ वगैरे जळून गेलें आहे ॥ १०४ ॥ मला मारलीस तर माझे

व्याधस्यवचनंश्रुत्वाहरिणीदुःखिताभृशं ॥ व्याधंप्राहरुदित्वासामामां
व्याधनिपातय ॥ १०३ ॥ नास्तिमांसंवसामेदःशरीरेरुधिरंचमे ॥ तेजो
बलंचमेसर्वंनिर्दग्धंविरहाग्निना ॥ १०४ ॥ अहंप्राणैर्वियुक्तास्यांभोजनंते
नजायते ॥ केवलंपापभागीस्याममप्राणविघातकः ॥ १०५ ॥ मैवंकुरुम
हाव्याधदीनांमामनुकंपय॥बलवान्सुमहातेजामेदोमांसपरिप्लुतः ॥ १०६ ॥

प्राण मात्र जातील, या शुष्क शरीरानें तुझें भोजन घडणार नाहीं. माझे प्राण घेतल्यानें केवळ स्त्रीहत्येच्या पापाचा मात्र विभागी होसील. ॥ १०५ ॥ तेव्हां असें करूं नको. हे व्याधा, मी दीन आहें. माझ्या वरती दया कर. एथें मोठा बलवान् मेदमांसांनीं भरलेला

